# *॥ अथ वाजसनेयिनां विवाह पद्धतिः ॥*

महामहत्तक सठक्कुर वीरेश्वर विरचिता।

झोपाख्य परिडत श्री चन्द्रशेखर तर्करत्नेन विषमस्थल टिप्पण्याक्वचिन्मैथिली भाषयाच समलंकृता।

परिडतप्रवर श्री निरसन मिश्रेण संशोधिता।

मूल्य ।=)

प्रकाशक—बाबू श्री रघुबर सिंह बुकसेलर, मधुबनी (दरभंगा)

श्री गणेशाय नमः ॥ सन्धिविग्रहमन्त्रीन्द्रदेवादित्य तनूद्भवः । भूमिपाल शिरोरत्न रञ्जिताङ्घ्रि सरोरुहः ॥
सन्धिविग्रहिकः श्रीमद्वीरेश्वर सहोदरः । महामहत्तकः श्रीमान् विराजति गणेश्वरः ॥
श्रीमतारामदत्तेन मन्त्रिणातस्यसूनुना । पद्धतिः क्रियते रम्याधर्म्म्यावाजसनेयिनाम् ॥

तत्रादौविवाहः ॥ तत्र कन्याहस्तेन षोड़शहस्तपरिमितमण्डपन्तद्दक्षिण दिशि पश्चिमान्दिशिमाश्रित्य मण्डपसल्लँग्नमुत्तराभिमुखङ्कौतुकागारं मण्डपाद्बहिरैशान्यां जामातृ चतुर्हस्त मित सिकतादिपरिष्कृतान्तुष केश शर्क्करादि शून्यां वेणुनिर्मितां वेदीञ्च कारयेत् ॥ विवाह दिने कृत नित्य क्रियेण जामातृपित्रामात्रिका पूजा पूर्वक मभ्युदयिकं कर्त्तव्यम्, कन्या पिताच स्नातः शुचिः शुक्लाम्बर धरः कृत नित्य क्रियोमात्रिकापूजाऽभ्युदयिके कृत्वाऽर्हणावेलायाम्मण्डपे प्रत्यं मुख आचम्योत्तिष्ठन् प्राङ्मुखं वरमूद्र्ध्वजानुं सम्बोध्य, "ॐ साधुभवानास्तामर्च्चयिष्यामोभवन्तम्" । इतिब्रूयात् । "ॐ अर्च्चयेति" वरेण प्रत्युक्ते वरोपवेशनार्थं शुद्धमासनन्दत्वा विष्टरमादाय विष्टरो विष्टरो विष्टर इत्यन्येनोक्ते, "ओं विष्टरः प्रतिगृह्यतामिति" यजमानेनोक्ते वरः "ओं विष्टरम्प्रतिगृहणामी" त्यभिधाय

विष्टरं गृहीत्वा "ओं वर्ष्मोऽस्मि समानानां मुद्यता मिव सूर्य्यः ॥ इमन्तमभितिष्ठामि योमाकश्चाभिदासति," इत्यनेनासने उत्तराग्र विष्टरोपरि वर उपविशति ॥ तत उपविश्य यजमानः पाद्यमञ्जलिमादाय पाद्यं पाद्यं पाद्यमित्यन्येनोक्ते, "ओं पाद्यं प्रतिगृह्यतामिति वदेत् ओं पाद्यं प्रति गृह्णामीति" वरोऽभिधाय यजमानाञ्जलितोऽञ्जलिना पाद्य मादाय "ओं विराजोऽदोहोऽसि-विराजोदोहमशीय ॥ मयिपाद्यायै विराजोदोहः," इति दक्षिणपादं प्रक्षालयति । (१) अनेनैव क्रमेणानेनैव मन्त्रेण वामपादं प्रक्षालयेत ॥ ततः पूर्ववद्विष्टरान्तरं (२) गृहीत्वा पूर्वोक्तमन्त्रेणैव (३) चरणयो रधस्तादुत्तराग्रं वरो-

(१) सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथममिति पारष्कर वचनात् ।

(२) कुशविष्टरस्तु कुशानां पञ्चविंशत्या कार्य्यः पञ्चाशता भवेद्ब्रह्मा तदर्द्धेनतु विष्टरः । ऊर्द्ध्वकेशो भवेद्ब्रह्मा अधःकेशस्तुविष्टरः । दक्षावर्त्तो भवेद्ब्रह्मा वामावर्त्तोऽथविष्टरः इतिवचनात् कुशाल्पेसति त्रिभिरपि कुशैः कार्य्यः।

(३) ओं वर्ष्मोऽस्मीतिमन्त्रेण ।

भाषा (१) ब्राह्मण कें पहिने दहिन पैर क्षत्रियादि कें वाम पैर धोयबाक चाही ।

भाषा (२) पचीस कुशक अधोमुख वामावर्त्त विष्टर बनावी । पचास कुशक ऊर्द्ध्वमुख दक्षिणावर्त्त ब्रह्मा बनावी । अल्प कुश रहला सँ तिनियों कुशक भय सकैत अछि ।



दद्यात् ॥ ततो दुर्वाक्षतफलचन्दन युताऽर्घ पात्रं (१) गृहीत्वा यजमानः अर्घोऽर्घोऽर्घ इत्यन्येनोक्ते ओं अर्घः प्रति गृह्यतामिति वदेत् ॥ ततो वरः ओं अर्घं प्रतिगृह्णामीत्यभिधाय यजमान हस्तादर्घं गृहीत्वा ओं आपस्थयुष्माभिः सर्वान् कामानवाप्नुवानि, इति शिरसि किञ्चिदक्षतादिकं दत्वा ओं समुद्रंवः प्रहिणोमि स्वाय्योंनिमभिगच्छत । अरिष्टास्माकं विराभापरा सेचिमत्पयः, इत्यर्घपात्रस्थ जलमैशान्यां त्यजन् पठति ॥ ततो यजमान आचमनीमादाय आचमनीयमाचमनीयमाचमनीयमित्यन्येनोक्ते ओं आचमनीयं प्रतिगृह्यतामितिवदेत् ततो वरः ओं आचमनीयं प्रतिगृह्णामीत्यभिधाय यजमानहस्तादाचमनीयं गृहीत्वा ओं आमागन्यशसासꣳ सृजवर्च्चसातम्माकुरुप्रियं प्रजानामधिपतिम्पशूनामरिष्टिन्तनूनाम् इत्यनेन सकृदाचमति द्विस्तूष्णीम् ॥ ततो यजमानः कांस्यपात्रस्थ दधिमधु घृतानि कांस्य

( १ ) शंखं ।

पात्रपिहितानि मधुपर्क्क (१) मादाय, मधुपर्क्कोंमधुपर्क्कोंमधुपर्क्क इत्यन्येनोक्ते ओं मधुपर्क्कः प्रति गृह्यतामिति वदेत्, ततो ओं मधुपर्क्कं प्रतिगृह्णामीत्यभिधाय, ओं मित्रस्यत्वाचक्षुषा प्रतीक्षे इति दातृकरस्थमेव निरीक्ष्य ओं देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यां प्रतिगृह्णामि इति मधुपर्क्कं गृहीत्वा वामहस्ते कृत्वा ओं नमः श्यावा (२) श्यायान्नशनेयत्त आविद्धन्तत्ते निष्कृन्तामि,

(१) विष्टरादि मधुपर्क्क पर्यन्ताभ्यर्हणोपकरणानि तत्रविष्टरं पञ्चविंशति दर्भतरुण कूर्च्चम् । पादप्रक्षालनार्थ मुदकं ताम्रादि पात्रस्थं सुखोष्णम् । अर्घं गन्धपुष्पाक्षत कुशतिलशुभ्रसर्षप दधिदुर्वान्वितं सुवर्णादि पात्रस्थ मुदकंज्ञेयमिति हरिहरभाष्यव्याख्यान स्वरसात् । कांस्यपात्रस्थं मधुपर्क्कं कांस्यपात्रान्तरेण पिहितमित्यर्थः ।

(२) ओं नमस्येति अस्यार्थः हे नमस्य मधुपर्क्कत्वां अवाश्यायामि मिश्रयामि किञ्च ते तव अशने भोजने यत् अविद्धमुपहतं तत् ते तव निष्किन्तामि अपसारयामि इति ब्राह्मण सर्वस्वे ।

(१) भाषा—विष्टर सँ लयक मधुपर्क पर्य्यन्त अर्हणोप करण थीक ताहिमें विष्टर पचीस उत्तम कुशाक उत्तसमय चाही । पादप्रक्षालन निमित्त जल तामाक पात्र में किञ्चित गरम चाही । अर्घक हेतु चानन फूल अक्षत कुश तिल सरिसों दही दूभि यहि सभ सँ मिलल सुवर्णादिपात्र में राखल जल चाही । कांसक थारी में कांसाक थारी सँ झाँपल मधुपर्क्क राखी ।

मधुपर्क — दही, घृत, मधु —

इत्यनामिकया प्रदक्षिणमालोड्यानामिकाङ्गुष्ठाभ्यां भूमौ किञ्चिन्निःक्षिपेत् पुनस्तथैव द्विः प्रत्येकं क्षिपेत् ॥ ततः ओं यन्मधुनोमधव्यम्परमꣳरूपमन्नाद्यम् । तेनाहं मधुनोमधव्येनपरमेणान्नाद्येन परमोमधव्योऽन्नादोऽशानि, इति वारत्रयं मधुपर्क्कं वरः प्राश्नाति इति प्राशनं मन्त्र पाठः ॥

ततो मधुपर्क्कशेषमसञ्च(१)रदेशे(२)धारयेत् ॥ तत आचम्य ॐ वाङ्मआस्येअस्तु, इत्यास्यम् । ॐ नसोर्म्मेप्राणोअस्तु, इति नासापुटे ॥ ॐ अक्ष्योर्म्मेचक्षुरस्तु, इति चक्षुषी ॥ ॐ कर्णयोर्म्मेश्रोत्र मस्तु, इति कर्णौ ॥ ॐ बाह्वोर्म्मेबलमस्तु, इत्यंसौ ॥ ॐ ऊर्व्वोर्म्मेओजोअस्तु, इत्यूरू ॥ ॐ अरिष्टानिमेऽङ्गानितनूस्तन्वामेसहसन्तु, इति सर्व्वगात्राणि च स्पृष्ट्वा ॥ नापितेन वराञ्जलौतृणमेकन्दत्त्वा

(१) जनपद शून्यदेशे । (२) प्राशित शेषं पुत्राय शिष्याय वा दद्यात्तसर्वं वा भक्षयेत् पूर्वस्यांदिशि असंचरे प्रदेशे वाक्षिपेत् इति हरिहर भाष्ये । परन्तु नोच्छिष्टं कस्यचिद्दद्यादित्यादिमनु वचन प्रामाण्यानुरोधेन असंचर देशे एव धारयेत् ।

भाषा (२) प्राशनावशिष्ट मधुपर्क पुत्र के अथवाशिष्य के देमकचाही अथवा अपनहि सभ भक्षण कयली अथवा निर्जन देश में राखि दी । परन्तु अपन उच्छिष्ट ककरहु देमक नहि चाही तें निर्ज्जन देशहि में धारण व्यवहार अछि ।

गौग्गौंग्गौंरित्यभिहितेवरः ॥ ॐ मातारुद्राणां दुहितावसूनाथ्ठं स्वसादित्यानाममृतस्यनाभिः । प्रनुवोचंचिकितुषेजनायमागामनागामदितिम्बधिष्ट । ममचामुष्यचामुकशर्म्मणोयजमानस्यपाप्माहतः ॥ ॐ उत्सृजततृणान्यत्तु. इति तृणंछित्त्वा गामुत्सृजेत् ॥ ततो वेदिकायान्तुषकेश शर्करादिरहितायां हस्तमात्रपरिमित चतुरस्राम्भूमिंकुशैःपरिसमुह्य, तान्कुश।नैशान्यांपरित्यज्य गोमयोदकेनोपलिप्यस्रुव-मूलेनस्फ्ये(१)न वोत्तरोत्तरक्रमेणप्रादेशमात्रन्त्रिरुल्लिख्योल्लेखन क्रमेणानामिकाङ्गुष्ठाभ्यामुद्धृत्यजलेनाभ्यु-क्ष्य तत्र तूष्णींकांस्यपात्रस्थमग्निप्रत्यङ्मुखमुपसमाधाय तद्रक्षार्थङ्किञ्चिन्नियुज्यकौतुकागाराद्वरः कन्या-मानीयमण्डपे ॥ ॐ जगङ्गच्छपरिधित् स्ववामोभवाकृष्टीनामभिशस्तिपावा । शतञ्चजीवशरदः सुवर्चारयिञ्च पुत्राननुसंव्ययस्वायुष्मतीदंपरिधत्स्ववासः. इति पठित्वा परिधानवस्त्रन्तस्यैदद्यात् ॥ ततः ॐ याअकृन्तन्नव यन्या अतन्वतयाश्चदेवीस्तन्तूनभितोततन्थ । तास्त्वादेवीर्ज्जरसेमव्ययँयस्वायुष्मतीदं

(१) खड्गाकृति खदिर काष्ठस्फ्य तेन ।

भा० (१) खड्ग सन खैरक श्रुचि बनाबी ।



परिधत्स्ववामः ॥ इत्युत्तरीयवस्त्रन्तस्यै दद्यात् । ॐ परिधास्यै यशोधास्यै दीर्घायुत्त्वाय जरदष्टिरस्मि । शतञ्च जीवामि शरदः पुरू(१)चीरायस्पोषमभिसव्ययँयिष्ये ॥ इति पठित्वा वरः स्वयंवस्त्रंपरिधत्ते ॥ ॐ यशसा माद्यावापृथिवी यशसेन्द्राबृहस्पतो । यशोभगश्चमाविदद्यशोमा प्रतिपद्यताम् ॥ इति पठित्वो त्तरीयं परिदधाति ॥ ततोवरस्यकन्यायाश्च द्विराचमनम् ॥ ततः कन्याप्रदेन । ओं परस्परं समञ्जेथा मितिप्रैषानन्तरं कन्यावरयोः परस्पराभिमुखीकरणम् ॥ ओं समञ्जन्तुविश्वेदेवाः समापो हृदया निनौ । सम्पातरिश्वासन्धातासमुदेष्ट्री दधातुनौ, इति वरः पठति ॥ ततः कन्याप्रदकर्तृकं जन्मग्रन्थिबन्धनम् ॥ अथ कन्यादानम् ॥ दाता(२)शंखस्थ दुर्वाक्षत फल चन्दन जलान्यादाय जामातृदक्षिण करोपरि-कन्यादक्षिणकरन्निधाय, ओं दाताहं वरुणोराजाद्रव्यमादित्यदैवतम् । विप्रोऽसौविष्णु रूपेण प्रतिगृह्णा-

(१) पुरुचिः बहुतेजाः

(२) कन्यादानाधिकारी याज्ञवल्क्यः पिता पितामहो भ्राता सकुल्योजननी तथा कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ।

भाषा (२) कन्यादानाधिकारी पिता, पितामह, भ्राता, सात पुरुष सँ आगाँ दश पुरुषक भीतर सगोत्र ओ माता एतेक गोटे अधिकारी थिकाह ।

त्वयंविधिः, इतिपठित्वा ॥ ओं अद्यामुकमासीयामुकपक्षीयामुकतिथौ अमुकगोत्र(१)स्यामुकप्रवरस्यामुक शर्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्मणः पौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्मणः पुत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्मणः प्रपौत्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्मणः पौत्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्मणोममपुत्रीम् एवं त्रिरुच्चार्य्य ॥ अमुकगोत्रायामुकप्रवरायामुकशर्म्मणे

(१) अथ प्रवराध्यायः ॥ कात्यायन गोत्रस्य, कात्यायन विष्णवङ्गिरसस्त्रयः प्रवराः । पराशर गोत्रस्य शक्ति वशिष्ठ पराशरास्त्रयः प्रवराः । काश्यप गोत्रस्य, काश्यपावत्सारनैध्रुवास्त्रयः प्रवराः । वत्सगोत्रस्य, और्व्वच्यवन भार्ग्गव जामदग्न्याप्लवानाः पञ्च प्रवराः । सावर्ण्य गोत्रस्य, और्व्वच्यवन भार्ग्गव जामदग्न्याप्लवानाः पञ्च प्रवराः । शाण्डिल्य गोत्रस्य, शाण्डिल्यासितदेवलास्त्रयः प्रवराः । भारद्वाज गोत्रस्य, भारद्वाजाङ्गिरसबार्हस्पत्यास्त्रयः प्रवराः । गौतम गोत्रस्य, अंगिरो वसिष्ठ गार्हपत्यास्त्रयः प्रवराः । गार्ग्य गोत्रस्य, गार्ग्यघृत कौशिक माण्डव्याथर्व वैशम्पायनाः पञ्च प्रवराः । कौशिक गोत्रस्य, कौशिकात्रिजमदग्नयस्त्रयः प्रवराः । इति प्रवराध्यायः ॥



ब्राह्मणायवरायतुभ्यममुकगोत्रा ममुकप्रवराममुकनाम्नीमिमांकन्यां सालंकारां प्रजापतिदैवतां स्वर्ग(१) कामः पत्नीत्वेनाहं सम्प्रददे, इति दद्यात्, ओं स्वस्तीतिप्रतिवचनम् ॥ ओं द्यौस्त्वाददातु पृथवीत्त्वा प्रतिगृह्णातु. इति वरः पठेत् ॥ ततः कन्याप्रदः शङ्खस्थदुर्व्वाक्षतफलचन्दन जल दक्षिणाद्रव्यमादाय, ओं अद्यकृतैतत्कन्यादान प्रतिष्ठार्थमिमं सुवर्णमग्निदैवतममुकगोत्रायामुकप्रवरायामुकशर्म्मणेब्राह्मणाय वराय दक्षिणान्तुभ्यमहं सम्प्रददे, इति दक्षिणान्दद्यात् ओं स्वस्तोतिप्रतिवचनम् । गोमिथुनंवारुद्र दैवतन्दक्षिणान्दद्यात्, ततः ओं कोऽदात्कस्मा अदात् कामोऽदात् कामायादात् । कामोदाताकामः प्रतिग्रहीताकामैतत्ते, इतिवरः पठेत् ॥

(१) अन्य कर्तृक कन्या दाने कन्यापितृगत स्वर्गकामः । इति योजनीयम् ।

भाषा (१) पिता सँ भिन्न व्यक्ति कन्यादान करथि तँ "कन्यापितृगत स्वर्गकामः" ई संकल्प मेँ जोड़ि देवक चाही ।

ततस्तांपाणौगृहीत्वा, ओं य (१) दैषिमनसादूरंदिशोऽनुपवमानोवा । हिरण्यपर्णो वैकर्णः सत्वामन्मनसां करो(२)तु श्रीअमुकदेवि, इतिवरः पठन्निःक्रामति ॥ ततो वेदिदक्षिणस्यान्दिशि वारिपूर्णदृढ कलशमूर्द्ध्वन्तिष्ठतोमौनिनः पुरुषस्य स्कन्धेऽभिषेक पर्य्यन्तन्धारयेत्, ततः ओं परस्परं समीक्षेथामितिकन्याप्रद प्रैषान्तरं ओं अघोरचक्षुरपतिघ्न्येऽधिशिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसुर्द्देवकामास्योनाशन्नो भवद्धिपदेशञ्चतुः पदे ॥ सोमः प्रथमोविविदेगन्धर्वोविविदउत्तरः। तृतीयोऽग्निष्टे पतिस्तुरीयस्तेमनुष्य जाः॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिञ्चपुत्राँश्चादा दग्निर्म्मह्यमथो इमाम् ॥ सानः पूषाशिवतमामैरयसान ऊरू उशती विहर । यस्यामुशन्तः प्रहरा मशेपर्य्यस्यामु कामावहवोनिविष्ट्यै, इतिवरः पठित मन्त्रान्ते परस्परनिरोक्षणम् ॥ ततोऽग्निं प्रदक्षिणीकृत्य पश्चादग्नेरहतवस्त्रवेष्टिततृण पूरके कृत्वा तदुपरि

(१) यदैषीति हे अमुक देवि कन्यके त्वंयन्मनसा हृदयेनदूरं एषिगच्छसि पितृकुलतोवहिर्भूत्वाकेन कुत्रनीये इति सोत्कण्ठाभवसि तत्र दिशः प्राच्यादयः अनुपश्चात् पवमानो वायुः हिरण्यपर्णो रविः वैकर्णो अग्निः सतेसर्वेत्वांमन्मनसांमद्गत हृदयां करोमि कुर्वन्तु इत्यर्थः ।

(२) करोतु इति पाठश्चिन्त्योऽपि सम्प्रदायानुसारात्कलिपय भाष्यस्वरसाच्चलिखितः ।



दक्षिणचरणन्दत्वा वधून्दक्षिणतः कृत्वा वरउपविश्य पुष्पचन्दनताम्बूलवस्त्राण्यादाय, ओं अद्य कर्त्तव्य विवाहाङ्ग भूत होमकर्म्मणि कृताकृतावेक्षणरूप ब्रह्मकर्म्मकर्त्तुममुकगोत्रममुक शर्म्माणं ब्राह्मण मेभिः पुष्पचन्दन ताम्बूलयज्ञोपवीतवासोभिर्ब्रह्मत्वेन त्वामहं वृणे, इति ब्रह्मा (१) णंवृणुयात्, ओं वृतोस्मीतिप्रतिवचनम्, ओं यथाविहितं कर्म्मकुरु, इतिवरेणोक्ते, ओं करवाणीति प्रतिवचनानन्तरं वरोऽग्नेर्दक्षिणतः शुद्धमासनन्दत्वा तदुपरि प्रागग्रान् कुशानास्तीर्य्य ब्रह्माणमग्निप्रदक्षिण क्रमेणानीय, ओं अस्मिन्कर्म्मणि त्वम्मे ब्रह्माभवेत्यभिधाय. ओं भवानीतितेनोक्ते कल्पितासने उपवेशयेत् ॥ ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्यकुशैराच्छाद्य ब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततः परिस्तरणं वर्हिषश्चतुर्थ भागमादायाग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्य्यन्तं नैरृताद्वायव्यान्तम-

(१) ब्राह्मणाभावे दक्षिणावर्त्त पञ्चाशत्कुशात्मकमन्यथा यथाऽऽचारं ब्रह्माणमुपवेशयेत् ॐ अद्यकर्त्तव्य विवाहाङ्ग होम कर्म्मणि कृताकृता वेक्षणरूप ब्रह्मकर्म्मकर्त्तु मस्मिन् कर्म्मणि त्वम्मे ब्रह्माभव इत्यभिधायासने उपवेशयेत् अत्र वरण प्रतिवचनादिकं नास्ति ।

ग्नितः प्रणीतापर्य्यन्तम् ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि कुशात्रयं पवित्रकरणार्थं साग्रमनन्तर्गर्भिकुशा-
पत्रद्वयं प्रोक्षणीपात्रमाज्यस्थाली सम्मार्जन कुशा वेणीरूपोपयमनकुशाः समिधस्तिस्रः स्रुवः आज्यम्
षट्पञ्चाशदुत्तर मुष्टिशतद्वयावच्छिन्नामतण्डुल पूर्ण पा(१)त्रं ब्रह्मदक्षिणार्थमेतानि पवित्रच्छेदनकुशानां
पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ अथ तस्यामेवदिश्यसाधारणवस्तू न्युप कल्पनीयानि ॥ तत्रशमी
पलाशमिश्रालाजाः दृषदुपलम् कुमारी भ्राता सूर्पं दृढः पुरुषः अन्यदपि तदुपयुक्तं द्रव्यम् ॥
ततः पवित्रच्छेदनकुशैः स्वप्रादेशमित पवित्रच्छेदनम् । ततः स(२)पवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणी
पात्रे निधायानामिकाङ्गुष्ठाभ्यामुभाभ्यामुत्तराग्रे पवित्रे गृहीत्वा, त्रिरुत्पवनम् । ततः प्रोक्षणीपात्रं

(१) अष्टमुष्टिर्भवेत्कुञ्चिः कुञ्चयोऽष्टौच पुष्कलम् पुष्कलानिच चत्वारि पूर्णपात्रं प्रचक्षते इति एतदशक्तौ
यावतान्नेन बहुभोक्तुस्तृप्तिर्भवति तावद्दद्यादिति कात्यायने नोक्तम् ।

भाषा (१ आठ मुट्ठी चाउरक कुञ्चि, आठ कुञ्चिक एक पुष्कल, चारि पुष्कल क पूर्ण पात्र होइत अछि । से नहिं भय सकय तँ यतबा अन्न
सँ बहुत भोजन करयवाला व्यक्ति तृप्ति होथि ततबा परिमाण अन्नदय पूर्ण पात्र बनावी ।

भा. (२) पैता एक कुशक बिचलापत्र बहार कय दी बांकी दुइ पत्रक साग्र प्रादेश प्रमाण बनावी ।

शमी



वामहस्तेकृत्वाऽनामिकांङ्गुष्ठाभ्याम् पवित्रे गृहीत्वा त्रिरुद्दिङ्गमनम् । (त्रिरुत्पवनंवेतिपाठः) प्रणीतोदकेन
प्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेनासादित वस्तुसेचनम् । ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ।
आज्य(१)स्थाल्यामाज्यनिर्वापः । ततोऽधिश्रयणम् । ततोज्वलत्तृणादिना हविर्वेष्टयित्वाप्रदक्षिण क्रमेण
पर्य्यग्निकरणम् । ततःस्रुवप्रतपनंकृत्वा सम्मार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवंसम्मृज्य प्रणीतोदके-
नाभ्युक्ष्य पुनस्त्रिः प्रतप्य स्रुवंस्वदक्षिणतः कुशोपरिनिदध्यात् ॥ तत आज्यमग्नेः प्रदक्षिणक्रमेणावतार्य्या-
ज्ये प्रोक्षणीवदुत्पवनम् । अवेक्ष्य सत्यपद्रव्ये तन्निरसनम्, पुनः प्रोक्षण्युत्पवनम् । तत उपयमनकुशान्
वामहस्तेनादाय प्रजापतिम्म(२)नसाध्यात्वा उत्तिष्ठन् घृताक्ताः समिध(३)स्तूष्णीमग्नौक्षिपेत् । तत उप-

(१) आज्यस्थाली तैजसीमृन्मयीवा द्वादशाङ्गुलविस्तता प्रादेशोच्चाकार्य्या ।
(२) सर्वत्र समिदादि होमे वैश्वदेव होमेच प्रजापति होमो मनसैव कार्य्यः प्रजापतिं मनसाध्यात्वा तूष्णीं
होमेषु सर्वत्रेत्याश्वलायन वाक्यात् शतपथे होमकाण्डे तथैव प्रजापतिम्प्रति वाणी प्रतिज्ञा दर्शनाच ।
(३) प्रादेशप्रमाणाः अङ्गुष्ठस्थूला समिधोग्राह्याः ।

भा. (१) आज्यस्थाली ( घृत रखबाक पात्र ) कांसाक वा माटिक बारह आंगुर विस्तार प्रादेश प्रमाण ऊँच करयक चाही ।
भा. (२) सभ ठाम समिदादि विश्वदेव सम्बन्धी होम में प्रजापति होम मानसिके करक चाही ।
भा. (३) प्रादेश प्रमाण अंगुष्ठ परिमित मोट समिध (आमक काठी) चाही ।

विश्य प्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निपर्य्युक्षणङ्कृत्वा प्रणीतापात्रे पवित्रेनिधाय पातितवामजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ (१)स्रुवेणा(२)ज्याहुतीर्ज्जुहुयात् । तत्राघारादारभ्य द्वादशाहुतिषु तत्तदाहुत्यनन्तरं स्रुवावस्थित हुतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः, ओं प्रजापतये स्वाहा, इदं प्रजापतये, इति मनसा । ओं इन्द्रायस्वाहा, इदमिन्द्राय इत्याघारौ । ओं अग्नयेस्वाहा, इदमग्नये, ओं सोमायस्वाहा, इदंसोमाय, इत्याज्यभागौ ॥ ओं भूः स्वाहा, इदम्भूः, ओं भुवः स्वाहा, इदम्भुवः, ओं स्वः स्वाहा, इदं स्वः, एतानि महाव्याहृतयः ॥ ओं त्वन्नो अग्नेवरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः । यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳬसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्याम् ॥ ओं त्वन्नोअग्नेऽवमोभवोतोनेदिष्ठो अस्याउषसोव्युष्टौ । अवयक्ष्वनोवरुणᳬरराणोवीहिमृडीकᳬसुहवोनएधि-

(१) अग्निध्मानन्तु मुखेनैव कार्य्यं नव्यजनादिना पाकाद्यग्नावेव मुखाध्मानस्य निषिद्धत्वात् ।

(२) स्रुवस्तु खादिरः पालाशोवा हस्तपरिमितः कार्य्यः ।

(१) भा. हवनीय अग्नि मूहैं सँ फूकिक पजारी वियनि इत्यादि सँ नहिं । पाक निमित्तक अग्नि मूह सँ पजारब निषेध थीक ।

(२) भा. स्रुव खाएर वा पलाशक एक हाथ परिमित बनावी ।



स्वाहा, इदमग्नीवरुणाभ्याम् । ओं अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्वमयाअसि । अयानोयज्ञवँहास्ययानोधेहि भेषजᳬस्वाहा, इदमग्नये ॥ ओं येतेशतंवरुणयेसहस्रय्यँज्ञियाः पाशाविततामहान्तः । तेभिर्न्नोअद्यसवितोऽतविष्णुर्व्विश्वेमुञ्चन्तु मरुतः स्वर्क्काः स्वाहा, इदं वरुणाय सवित्रे विष्णवेविश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्क्केभ्यः । ओं उदुत्तमवँरुणपाश मस्मदवाधमं विमध्यमᳬश्रथाय । अथावयमादित्य व्रतेतवानागसो अदितयेस्याम स्वाहा, इदं वरुणाय । एताः सर्वप्रायश्चित्तसंज्ञकाः ॥

ततोहुतशेषमन्वारम्भञ्च विना, ओं ऋताषाडृतधामाग्निर्ग्गन्धर्वस्सन इदं ब्रह्मक्षत्रम्पातु तस्मैस्वाहा वाट् । इदमृतासाहे ऋतधाम्ने अग्नयेगन्धर्वाय । ओं ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसोमुदोनामताभ्यः स्वाहा । इदमोषधिभ्योऽप्सरोभ्योमुद्भ्यः । ओं सᳬहितोविश्वसामासूर्य्योगन्धर्वं स्सन इदं ब्रह्मक्षत्रम्पातुतस्मै स्वाहा वाट् इदं सᳬहितायविश्वसाम्नेसूर्य्याय गन्धर्वाय । ओं सᳬहितो विश्वसामासूर्य्यो गन्धर्व्वस्तस्य मरीचयोऽप्सरस आयुवोनामताभ्यः स्वाहा, इदम्मरीचिभ्योऽप्सरोभ्य आयुभ्यः । ओं सुखुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वस्सन इदं ब्रह्मक्षत्रंपातु तस्मै स्वाहावाट्, इदं सुखुम्णाय सूर्य्य

रश्मये चन्द्रमसे गन्धर्वाय । ॐ सुखुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्यनक्षत्राण्यप्सरसो भेकुरयो नामताभ्यः स्वाहा, इदन्नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यः । ॐ इषिरो विश्वव्यचावातोगन्धर्व्वस्सन इदं ब्रह्मक्षत्रं पातुतस्मैस्वाहावाट् इदमिषिरायविश्वव्यचसेवतायगन्धर्व्वाय । ॐ इषिरोविश्वव्यचावातो गन्धर्व्वस्तस्यापोऽप्सरस ऊर्ज्जोनामताभ्यः स्वाहा, इदमद्भ्योऽप्सरोभ्य उर्ग्भ्यः । ॐ भुज्युः सुपर्णो यज्ञोगन्धर्वस्सन इदं ब्रह्मक्षत्रम्पातु स्वाहा तस्मैवाट्, इदम्भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय । ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावानामताभ्यः स्वाहा, इदन्दक्षिणाभ्योऽप्सरोभ्यः स्तावाभ्यः । ॐ प्रजापतिर्विश्वकर्म्मा मनोगन्धर्व्वस्सन इदं ब्रह्मक्षत्रम्पातुतस्मै स्वाहावाट् इदम्प्रजापतये विश्वकर्म्मणे मनसे गन्धर्वाय । ॐ प्रजापतिर्विश्वकर्म्मामनोगन्धर्वस्तस्य ऋक्‌सामान्यप्सरस एष्टयोनामताभ्यः स्वाहा, इदमृक्सामेभ्योऽप्सरोभ्य एष्टिभ्यः ॥ इति राष्ट्रभृत् ॥ ॐ चित्तञ्चस्वाहा, इदञ्चित्ताय । ॐ चित्तिश्चस्वाहा, इदञ्चित्यै, ॐ आकूतञ्च स्वाहा, इदमाकूताय, ॐ आकूतिश्चस्वाहा, इदमाकूत्यै, ॐ विज्ञातञ्च स्वाहा, इदं विज्ञाताय, ॐ विज्ञातिश्च स्वाहा, इदं



विज्ञात्यै, ॐ मनश्च स्वाहा, इदम्मनसे, ॐ शक्वरीश्चस्वाहा, इदं शक्वरीभ्यः, ॐ दर्शश्च स्वाहा, इदन्दर्शाय, ॐ पौर्णमासश्च स्वाहा, इदम्पौर्णमासाय, ॐ बृहच्च स्वाहा, इदं बृहते, ॐ रथन्तरश्च स्वाहा, इदं रथन्तराय, ॐ प्रजापतिर्जया निद्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु तस्मैविशः समनमन्तः सर्वाः सउग्रः सइहव्योवभूव स्वाहा, इदम्प्रजापतये जयानिद्राय ॥ इति जयाहोमः ॥ ॐ अग्निर्भूतानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामा शिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳬस्वाहा, इदमग्नये भूतानामधिपतये ।
ॐ इन्द्रोज्येष्ठानामधिपतिस्समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳬस्वाहा, इदमिन्द्राय ज्येष्ठानामधिपतये, ॐ यमः पृथिव्या अधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्याभ्यां पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳬस्वाहा, इदं यमाय पृथिव्या अधिपतये ॥ अत्रप्रणीतोदकस्पर्शः ॥ ॐ वायुरन्तरिक्षस्याधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳬ स्वाहा, इदं वायवे अन्तरिक्ष-

स्याधिपतये, ओं सूर्य्योदिवोऽधिपतिस्समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधाया मस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदं सूर्य्याय दिवोऽधिपतये, ओं चन्द्रमानक्षत्राणामधिपतिस्समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदञ्चन्द्रमसेनक्षत्राणामधिपतये, ओं बृहस्पतिर्ब्रह्मणोऽधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदं बृहस्पतये ब्रह्मणोऽधिपतये, ओं मित्रः सत्यानामाधिपतिरसमावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदं मित्राय सत्यानामधिपतये।

ओं वरुणोऽपामधिपतिस्समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधाया मस्मिन् कर्म्मण्यस्यान्देव हूत्याᳪ स्वाहा, इदं वरुणायापामधिपतये, ओं समुद्रः स्रोत्यानामधिपतिस्समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदं समुद्राय स्रोत्यानामधिपतये, ओं अन्नᳪ साम्राज्यानामधिपतिस्समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधाया



मस्मिन् कर्म्मण्यस्यान्देहूत्याᳪ स्वाहा, इदमन्नाय साम्राज्यानामधिपतये, ओं सोमओषधीनामधिपतिस्समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदं सोमायौषधीनामधिपतये, ओं सविताप्रसव नामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदं सवित्रे प्रसवानामधिपतये, ओं रुद्रः पशूनामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदं रुद्राय पशूनामधिपतये ॥ अत्र प्रणीतोदकस्पर्शः ॥ ओं त्वष्टारूपाणामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देव हूत्याᳪ स्वाहा, इदं त्वष्ट्रे रूपाणामधिपतये, ओं विष्णुः पर्वतानामधिपतिस्समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदं विष्णवे पर्वतानामधिपतये, ओं मरुतोगणानामधिपतयस्तेमाऽवन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मण्यस्यान्देवहूत्याᳪ स्वाहा, इदम्मरुद्भ्योगणानामधिपतिभ्यः, ओं पितरः पितामहाः परेऽवरे-

ततास्ततामहाः इहमाऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन् कर्म्मस्यान्देव हूत्याᳬस्वाहा, इदं पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यः ॥ अत्र प्रणीतोदकस्पर्शः ॥ इत्यभ्याताननामकम् ॥ ओं अग्निरेतु प्रथमोदेवतानाᳬसोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् तदयᳬराजा वरुणोऽनुमन्यताय्यँथेयᳬस्त्री पौत्रमघन्नरोदात् स्वाहा, इदमग्नये, ओं इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतुदीर्घमायुः अशून्यो पस्था जीवतामस्तु माता पौत्र मानन्दमभि वुध्यता मियᳬस्वाहा, इदमग्नये गार्हपत्याय, ओं स्वस्तिनोऽग्ने दिवा पृथिव्या विश्वानिधेह्य यथाय जत्र । यदस्याम्महि दिविजातं प्रशस्तन्तदस्मा सुद्रविणन्धेहि चित्रᳬस्वाहा, इदमग्नये । ओं सुगन्नुपन्थाम्प्रदिशन्न एहि ज्योतिष्मध्येह्य जरन्नआयुः । अपैतु मृत्युरमृतम्म आगाद्वैवश्वतो नो अभयं कृणोतु स्वाहा, इदं वैवस्वताय । अत्र प्रणितोदकस्पर्शः ॥ ओं परंमृत्यो अनुपरेहि पन्थाय्यँस्ते अन्यइतरो देवयानात् । चक्षुष्मते शृण्वते ब्रवीमिमानः प्रजाᳬरीरिषोमोतवीरान् त्स्वाहा, इदं मृत्यवे । अत्र प्रणीतोदकस्पर्शः ॥ ततो वधूमग्रतः कृत्वा वधूवरौ प्राङ्मुखौ उत्थितौ भवतः । ततो वराञ्जलि



पुटोपरि सलँग्न वध्वञ्जलिस्थ घृताभिघारित वधूभ्रातृ(१)दत्त शमीपलाशमिश्रै र्लाजैर्व्वधूकर्त्तृक मन्त्रपाठ पूर्वकोहोमः । ओं अर्य्यमणंदेवंकन्या अग्निमयक्षत, सनोअर्य्यमादेवः प्रेतोमुञ्चतु मापतेः स्वाहा, इदमर्य्यम्णे, ओं इयन्नार्य्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरे(२)धन्तं ज्ञातयोममस्वाहा, इदमग्नये, ओं इमाल्लाँजानावपाम्यग्नौ समृद्धिकरणन्तव । ममतुभ्य(३)च सम्वदनन्तदग्निरनुमन्यतामियᳬ स्वाहा इदमग्नये ॥ ततोवरोवधूदक्षिणहस्तं साङ्गुष्ठं गृह्णाति । ओं गृभ्णा(४)मिते सौभगत्वाय हस्तम्मया पत्याजरदष्टिर्य्यथासः । भगोअर्य्यमा सविता पुरन्धिर्म्मह्यन्त्वादुर्ग्गार्हपत्यायदेवाः ॥ अमोऽहमस्मिसात्वᳬ

(१) वध्वाः सहोदर भ्रातुरभावे पितृव्यपुत्रादयः तथा चाश्वलायन गृह्यसूत्रं भ्राताभ्रातृस्थानो वा लाजानावपतीतितिचोक्ता गृह्यकारिकायाम् भ्रातृस्थानःपितृव्यस्य मातुलस्यचयःसुतः मातृष्वसुःसुतस्तद्वत्पितृष्व सुरिति ।

(२) एधन्तमिति छान्दसं ह्रस्वत्वमिति हलायुधः एधन्तामितिपाठः प्रामादिकः ।

(३) तुभ्येत्यत्रषष्ठ्यर्थे चतुर्थी सुपांसुलुगित्यादिनाविभक्तिलोपः संवदनमभिमुखीकरणं अर्थःस्पष्टः ।

(४) हृग्रहोर्भश्छन्दसीत्यनेन ग्रहधातोर्हकारस्य भकारः ।

भाषा—(१) कन्याक सोदर भाइक अभाव में पितिऔत ममिऔत मसिऔत ओ पिसिऔत भाइलोकनि लाजाहोम में अधिकारी भयसकैत छथि ।

सूर्य्यमुदीक्षस्वेतिवधूं सम्बोध्यवरआह । ओं तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येमशरदः शतं जीवेमशरदः शतꣳ शृणुयामशरदः शतं प्रब्रवामशरदः शतमदीनाः स्यामशरदः शतं भूयश्चशरदः शतात्, इति पठित्वा वधूः सूर्य्यम्पश्यति अस्तमिते सूर्ये ध्रुवमुदीक्षस्वेति पतिप्रैषानन्तरं वधूर्ध्रुवम्पश्यति । तत्र वरपठनीयोमन्त्रः, ओं ध्रुवमसिध्रुवन्त्वा पश्यामि ध्रुवैधिपोष्या मयि मह्यन्त्वादाद्बृहस्पतिः । मयापत्या प्रजावती सञ्जीव शरदः शतम्, इतिपृष्टासा यदिन पश्येत् तथापि पश्यामीत्येवं ब्रूयात् ॥ अथ वरोवधूदक्षिणांसस्योपरिहस्तन्नीत्वा तस्याहृदयमालभेत, ओं ममव्रते ते हृदयन्दधामि ममचित्तमनुचित्तन्ते अस्तु ममवाचमेकमनाजुषस्व प्रजापति ष्ट्वा नियुनक्तुमह्यम्, इतिमन्त्रेण ॥ अथ वधू मभिमन्त्रयतिवरः । ओं सुमङ्गलीरियंवधूरिमाꣳसमेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन, इतिमंत्रेण । अथ वधूम्वलवान् कश्चिद्ब्राह्मण उत्थाप्य प्रागुदग्वा गुप्तागारे लोहितानडुह चर्म्मणि लोमास्तीर्णे वरोवा उपवेशयेत् । ओं इहगावोनिषीदन्त्विहाश्वा इह पुरुषाः । इहोसहस्रदक्षिणो यज्ञ इहपूषानिषीदतु, इतिमंत्रेण ॥ अथ स्विष्टकृद्धोमः । ओं अग्नयेस्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते । स्रुवावस्थित हुतशेषघृतस्य



प्रोक्षणीपात्रे प्रक्षेपः । अयञ्च होमोब्रह्मणाऽन्वारब्ध कर्त्तृकः । तत आचम्य संस्रवप्राशनं कृत्वाऽऽचम्य, ओं अद्यकृतैतद्विवाहाङ्गभूतहोम कर्म्मणिकृताकृता वेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदंपूर्णपात्रं प्रजापतिदैवं तममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय ब्रह्मणेदक्षिणान्तुभ्यमहं संप्रददे, इति दक्षिणान्दद्यात् । ओं स्वस्तीति प्रतिवचनम् ॥ ततोऽग्निप्रदक्षिणक्रमेणहस्तं नीत्वा ब्रह्मोत्थापनम् ॥ ततः ओं सुमित्रियान आप-ओषधयः सन्तु, इति पवित्रंगृहीत्वा प्रणीताजलेन शिरः सम्मृज्य । ओं दुर्मित्रियास्तस्मैसन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः, इत्यैशान्यां प्रणीतान्युब्जीकरणम् । ततःस्तरण क्रमेण वर्हिरुत्थाप्य घृतेनाभिवार्य्यहस्तेनैव जुहुयात, तत्र मंत्रः । ॐ देवागातु विदोगातुं वित्वागातुमित मनसस्पत इमन्देवयज्ञꣳस्वाहा वातेधाः स्वाहा, इति ॥ तत उत्थाय वध्वा दक्षिण हस्तेन स्रुवेस्पृष्टे घृतपुष्पफलैः पूर्णाहुतिन्दद्यात, तत्र मंत्रः । ओं मूर्द्धानन्दिवो अरतिम्पृथिव्या वैश्वानरमृत आजातमग्निम् । कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रं जनयन्तदेवाःस्वाहा, इति ॥ तत उपविश्य स्रुवेण भस्मानीय दक्षिणानामिका गृहीत भस्मना, ओं त्र्यायुषञ्जमदग्नेः, इति ललाटे । ओं कश्यपस्यत्र्यायुषम्, इति ग्रीवा-

यित्वा, ओं अस्मिन् कर्म्मणि त्वम्मे ब्रह्माभव, इत्यभिधाय, ओं भवानीतितेनोक्ते कल्पितासने ब्रह्माणमुदङ्मुखमुपवेशयेत् । ततः पृथूदपात्रमग्नेरुत्तरतः प्रतिष्ठाप्य प्रणीतापात्रं पुरतः कृत्वा वारिणापरिपूर्य्य कुशैराच्छाद्य ब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणं वर्हिषश्चतुर्थभागमादायाग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्य्यन्तं नैऋताद्वायव्यान्तमग्नितः प्रणीतापर्य्यन्तम् । ततोऽग्नेरुत्तरतः पश्चिमदिशिपवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनन्तर्ग्गर्भिकुशपत्र द्वयं प्रोक्षणी पात्रमाज्यस्थाली चरुस्थाली सम्मार्जनकुशाः वेणीरूपोपयमनकुशाः समिधस्तिस्रः आज्यम् स्रुवः षट्पञ्चाशदुत्तर मुष्टिशतद्वयावच्छिन्नामतण्डुल पूर्णपात्रं चर्वर्थमामतण्डुलाः एतानि पवित्रच्छेदनकुशानां पूर्व पूर्व दिशि क्रमेणासादनीयानि ॥ ततः पवित्रच्छेदनकुशैः स्वप्रादेशमित पवित्रे छित्त्वा प्रणीतोदकं त्रिः प्रोक्षणीपात्रे सपवित्रकरेण निधाय द्वाभ्यामनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् । ततः प्रोक्षणीपात्रं वाम हस्तेनादायानामिकाङ्गुष्ठाभ्यापवित्रे गृहीत्वा त्रिरुद्दिङ्गनम् । प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् प्रोक्षणीजलेनासादितवस्तु सेचनम् । ततोऽग्नेरुत्तरतः प्रणीतादक्षिणदिशि प्रोक्षणी-

पृथूदपात्र (पैच्छ्वाकपूर्णपात्र)



पात्रं निदध्यात् ॥ अथाज्यस्थाल्यामाज्यनिर्व्वापः । प्रणीताजलं किञ्चिच्चरौ दत्त्वा प्रणीता जलेन तण्डुलान् त्रिः प्रक्षाल्य चरौ क्षिपेत् ॥ स्वयं चरुं गृहीत्त्वा ब्रह्मणात्वाज्यमग्नेरुत्तरतः चरु दक्षिणतआज्यं निदध्यात् । ततो ज्वलत् तृणमादाय हविर्द्वयो परि प्रदक्षिणम्भ्रामयित्त्वा वह्नौ तत्प्रक्षेपः । श्रृते चरौ वारत्रयं स्रुवप्रतपनम् । समार्ज्जनकुशानामग्रैरन्तरतोमूलैर्वाह्यतः स्रुवं सम्मृज्य प्रणोतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य स्वदक्षिणतः कुशोपरि निदध्यात् । तत आज्यमग्नितश्चरोः पूर्वक्रमेणानीयाग्रे धृत्वा पश्चिमेन चरुमानीयाज्यस्योत्तरतो निदध्यात् । ततोवारत्रयं प्रोक्षणीवदाज्यस्योत्पवनमवेक्ष्य सत्यप द्रव्ये तन्निरसनम् । ततः पूर्व्ववत्प्रोक्षण्युत्पवनम् । तत उपयमनकुशान् वाम हस्तेनादाय प्रजापतिम्मनसाध्यात्वा उत्तिष्ठन् घृताक्ताः समिधस्तूष्णीमग्नौ क्षिपेत ॥ तत उपविश्य सपवित्र प्रोक्षण्युदकेनाग्निं पर्य्युक्ष्य प्रणीतापात्रे पवित्रे धृत्वा ब्रह्मणान्वरब्धः पातितदक्षिणजानुः समिद्धत्तमेऽग्नौस्रुवेणाज्याहुतीर्जुहुयात् । तत्राघारादारभ्याहुतिचतुष्टये हुतशेषस्य प्रोक्षणीपात्रेप्रक्षेपः ॥ ओं प्रजापतये स्वाहा,

इदम्प्रजापतये, इति मनसा, ओं इन्द्राय स्वाहा, इदमिन्द्राय, इत्याघारौ। ओं अग्नये स्वाहा, इदमग्नये, ओं सोमाय स्वाहा, इदं सोमाय, इत्याज्यभागौ। तत आज्याहुति पञ्चतये स्थालीपाकाहुतौत्र पूर्व्वोपकल्पित पृथूदपात्रे तत्तदा हुत्यनन्तरं स्रुवावस्थित हुतशेषघृतस्य प्रक्षेपः। आहुति पञ्चतयेनान्वारब्धः। ओं अग्ने प्रायश्चित्ते त्वन्देवानाम् प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामियाऽस्यै पतिघ्नीतनूस्तामस्यै नाशय स्वाहा, इदमग्नये। ओं वायाप्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावा मियाऽस्यै प्रजाघ्ना तनूस्तामस्यै नाशय स्वाहा, इदं वायवे। ओं सूर्य्य प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामियाऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा, इदं सूर्य्याय। ओं चन्द्र प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावा मियाऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा, इदं चन्द्राय। ओं गन्धर्व प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामियाऽस्यै यशोऽघ्नी तनूस्तामस्यै नाशय



स्वाहा, इदं गन्धर्वाय। ततः स्थालीपाकेन जुहोति। ओं प्रजापतये स्वाहा, इदं प्रजापतये, इति
मनसा। अग्रिमाहुति नवके तत्तदाहुत्यनन्तरं हुतशेष घृतस्य प्रोक्षणी पात्रे प्रक्षेपः। तत्र ब्रह्मणान्वा-
रब्धनाज्यस्थाली पाकाभ्यां स्विष्टकृद्धोमः। ओं अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते। तत
आज्येन, ओं भूः स्वाहा, इदम्भूः, ओं भुवः स्वाहा, इदं भुवः। ओं स्वः स्वाहा, इदं स्वः। एताः
महाव्याहृतयः। ओं त्वन्नो अग्नेवरुणस्य विद्वान्देवस्यहेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशु-
चानो विश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा, इदमग्नि वरुणाभ्याम्। ओं सत्वन्नो अग्नेऽवमो भवोतीने
दिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्वनो वरुणꣳरराणो वीहि मृडीकꣳ सुहवोन एधि स्वाहा इदमग्नो
वरुणाभ्याम्। ओं अयाश्चाग्नेऽस्य नभिसस्ति पाश्च सत्वमित्व मयाअसि अयानो यज्ञम्वहास्य यानो-
धेहिभेषजꣳस्वाहा, इद मग्नये। ओं येते शतव्वँरुणये सहस्रं यज्ञियाः पाशा वितता महान्तः।
तेभिर्न्नो अद्य सवितोत विष्णुव्विश्वेमुञ्चन्तु मरुतः स्वर्काः स्वाहा, इदं वरुणाय सवित्रे विष्णवे विश्वे-

भ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः । ओं उदुत्तम व्वँरुणपाश मस्मदवाधमं विमध्यमꣳश्रथाय । अथा वय मादित्यवते तवानागसो अदितये स्याम स्वाहा, इदं वरुणाय । इति सर्व्व प्रायश्चित्तम् । ओं प्रजापतये स्वाहा. इदं प्रजापतये । इति मनसा । इति प्राजापत्यम् । ततः संस्रव प्राशनम् । तत आचम्य, ओं अस्यां रात्रौ कृतैतच्चतुर्थी होम कर्म्मणि कृता कृता वेक्षणरूप ब्रह्मकर्म्म प्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापति दैवतममुक गोत्रायामुक शर्म्मणे ब्राह्मणाय ब्रह्मणे दक्षिणा तुभ्यमहं सम्प्रददे. इति ब्रह्मणे दक्षिणान्दद्यात् । ओं स्वस्तीति प्रतिवचनम् । ततोऽग्नि प्रदक्षिण क्रमेण हस्तंनीत्वा ब्रह्मोत्थापनम् । ततः ओं सुमति त्रियान आप ओषधयः सन्तु, इति पवित्राभ्यां शिरः सम्मृज्य । ओं दुर्म्मित्रियास्तस्मै सन्तु योस्मान् द्वेष्टि यञ्च वयं द्विष्मः, इत्यैशान्यां प्रणितान्युब्जि करणम् । ततस्तरण क्रमेण वर्हिसनीय घृतेनाभिधार्य्य हस्तेनैव जुहुयात् ओं देवागातु विदोगातुं वित्वागातुमित । मनसस्पत इमन्देव यज्ञꣳस्वाहा, ओं वातेधा स्वाहा, इति मन्त्रेण ॥



ततः पृथूदपात्रस्थ जलमाम्रपल्लवेनानीय वरोमूर्द्ध्नि वधूमभिषिञ्चति ओं याते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दितातनूर्ज्जाघ्नोन्तत एनां करोमि साजीर्य्य त्वम्मयासह श्री अमुकदेवि इति मंत्रेण । ततो वधूंवरः स्थालीपाकम्प्राशयति, ओं प्राणैस्ते प्राणान्सन्दधामि । ओं अस्थिभिस्ते अस्थीनि सन्दधामि । ओं माꣳसैस्ते माꣳमानि सन्दधामि । ओं त्वचातेत्वचं सन्दधामि । इति मन्त्र चतुष्टयेन प्रतिमन्त्रान्ते प्राशनम् । ततो हस्तं प्रक्षाल्याचम्य वधूहृदयं स्पृष्ट्वावरः पठति, ओं यत्तेसुसीमे हृदयन्दिवि चन्द्रमसि श्रितंवेदाहं तन्मान्तद्विद्यात् । पश्येमशरदः शतं जीवेमशरदः शतꣳशृणुयामशरदः शतम्, इति मन्त्रेण ॥ अथ कङ्कण मोक्षणम् ॥ जन्मग्रन्थि विमोकादीन्याचार परिप्राप्तानि । तत उत्थाय वध्वा दक्षिणहस्तस्पृष्टस्रुवेण घृतपुष्पजलपूर्णेन, ओं मूर्द्धानन्दिवो अरतिम्पृथिव्या वैश्वानरमृत आजातमग्निम् । कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रं जनयन्तदेवाः स्वाहा, इति मन्त्रेण पूर्णाहुतिन्दद्यात् । तत उपविश्य स्रुवेण भस्मानीय दक्षिणानामिकागृहीतभस्मना, ओं त्र्यायुषञ्जमदग्ने, इति ललाटे,

ओं कश्यपस्य त्र्यायुषम्, इति ग्रीवायाम्, ओं यद्देवेषु त्र्यायुषम्, इति दक्षिणबाहुमूले ओं तन्नो अस्तु त्र्यायुषम्, इति हृदि त्र्यायुषं कुर्य्यात्। अनेनैव क्रमेणानैव मन्त्रेण वधूललाटादावपि तत्र तन्नो, इत्यस्य स्थाने तत्ते इति विशेषः॥ अत्रापि सिन्दुरकरणमाचारात्॥ इति वाजसनेयिनां चतुर्थीकर्म्म॥

नरहन विश्वेश्वरीय संस्कृत विद्यालय दर्शनशास्त्र प्रधानाध्यापकेन मैथिल भोपाख्य पण्डित
श्री चन्द्रशेखर तर्करत्नेन विषमस्थल टिप्पण्याक्वचिन्मैथिली भाषया च समलंकृता।
हरिनगर ग्राम वास्तव्येन चन्द्रधारि संस्कृत विद्यालय प्रधानाध्यापकेन
पण्डितप्रवर श्री निरसन मिश्रेण संशोधिता॥

श्री रघुवर सिंहेन स्वकीय महावीर नाम्नि यन्त्रालये स्वायत्तीकृत्य प्रकाशिता मधुबनी, (दरभङ्गा)



मुद्रक—श्री हरेकृष्ण सिंह, श्री महावीर प्रेस, मधुबनी ( दरभंगा )।

❁ इति ❁

*॥ वाजसनेयिनां विवाह पद्धतिः ॥*

॥ समाप्ता ॥